## द्वादशः सर्गः

स तस्य मध्ये भवनस्य संस्थिते
लतागृहांश्चित्रगृहान्निशागृहान् |
जगाम सीतां प्रति दर्शनोत्सुको
न चैव तां पश्यति चारुदर्शनाम् || 5.12.1 ||

स चिन्तयामास ततो महाकपिः
प्रियामपश्यन्रघुनन्दनस्य ताम् |
ध्रुवं न सीता ध्रियते यथा न मे
विचिन्वतो दर्शनमेति मैथिली || 5.12.2 ||

सा राक्षसानां प्रवरेण जानकी
स्वशीलसंरक्षणतत्परा सती |
अनेन नूनं प्रतिदुष्टकर्मणा
हता भवेदार्यपथे परे स्थिता || 5.12.3 ||

विरूपरूपा विकृता विवर्चसो
महानना दीर्घविरूपदर्शनाः |
समीक्ष्य सा राक्षसराजयोषितो
भयाद्विनष्टा जनकेश्वरात्मजा || 5.12.4 ||

सीतामदृष्ट्वा ह्यनवाप्य पौरुषं
विहृत्य कालं सह वानरैश्चिरम् |
न मेऽस्ति सुग्रीवसमीपगा गतिः
सुतीक्ष्णदण्डो बलवांश्च वानरः || 5.12.5 ||

दृष्टमन्तःपुरं सर्वं दृष्टा रावणयोषितः |
न सीता दृश्यते साध्वी वृथा जातो मम श्रमः || 5.12.6 ||

किं नु मां वानराः सर्वे गतं वक्ष्यन्ति सङ्गताः |
गत्वा तत्र त्वया वीर किं कृतं तद्वदस्व नः || 5.12.7 ||

अदृष्ट्वा किं प्रवक्ष्यामि तामहं जनकात्मजाम् |
ध्रुवं प्रायमुपासिष्ये  कालस्य व्यतिवर्तने || 5.12.8 ||

किं वा वक्ष्यति वृद्धश्च जाम्बवानङ्गदश्च सः |
गतं पारं समुद्रस्य वानराश्च समागताः || 5.12.9 ||

अनिर्वेदः श्रियो मूलमनिर्वेदः परं सुखम् |
भूयस्तत्रविचेष्यामि न यत्र विचयः कृतः || 5.12.10 ||

अनिर्वेदो हि सततं सर्वार्थेषु प्रवर्तकः |
करोति सफलं जन्तोः कर्म यच्च करोति सः || 5.12.11 ||

तस्मादनिर्वेदकरं यत्नं चेष्टेऽहमुत्तमम् |
अदृष्टांश्च विचेष्यामि देशान् रावणपालितान् || 5.12.12 ||

आपानशालाविचितास्तथा पुष्पगृहाणि च |
चित्रशालाश्च विचिता भूयः क्रीडागृहाणि च || 5.12.13 ||

निष्कुटान्तररथ्याश्च विमानानि च सर्वशः |
इति सञ्चिन्त्य भूयोऽपि विचेतुमुपचक्रमे || 5.12.14 ||

भूमीगृहांश्चैत्यगृहान्गृहातिगृहकानपि |
उत्पतन्निपतंश्चापि तिष्ठन्गच्छन्पुनः क्वचित् || 5.12.15 ||

अपवृण्वंश्च द्वाराणि कपाटान्यवघट्टयन् |
प्रविशन्निष्पतंश्चापि प्रपतन्नुत्पतन्निव । |
सर्वमप्यवकाशं स विचचार महाकपिः || 5.12.16 ||

चतुरङ्गुलमात्रोऽपि नावकाशः स विद्यते |
रावणान्तःपुरे तस्मिन्यं कपिर्न जगाम सः || 5.12.17 ||

प्राकरान्तरवीथ्यश्च वेदिकाश्चैत्यसंश्रयाः |
श्वभ्राश्च पुष्करिण्यश्च सर्वं तेनावलोकितम् || 5.12.18 ||

राक्षस्यो विविधाकारा विरूपा विकृतास्तथा |
दृष्टा हनुमता तत्र न तु सा जनकात्मजा || 5.12.19 ||

रूपेणाप्रतिमा लोके वरा विद्याधरस्त्रियः |
दृष्टा हनुमता तत्र न तु राघवनन्दिनी || 5.12.20 ||

नागकन्या वरारोहाः पूर्णचन्द्रनिभाननाः |
दृष्टा हनुमता तत्र न तु जनकात्मजा || 5.12.21 ||

प्रमथ्य राक्षसेन्द्रेण नागकन्या बलाद्धृताः |
दृष्टा हनुमता तत्र न सा जनकनन्दिनी || 5.12.22 ||

सोऽपश्यंस्तां महाबाहुः पश्यंश्चान्या वरस्त्रियः |
विषसाद महाबाहुर्हनूमान्मारुतात्मजः || 5.12.23 ||

उद्योगं वानरेन्द्राणं प्लवनं सागरस्य च |
व्यर्थं वीक्ष्यानिलसुतश्चिन्तां पुनरुपागतः || 5.12.24 ||

अवतीर्य विमानाच्च हनूमान्मारुतात्मजः |
चिन्तामुपजगामाथ शोकोपहतचेतनः || 5.12.25 ||

*इत्यार्थे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकण्डे द्वादशः सर्गः ॥*